# श्रीहनूमत्स्तोत्रम्

शृणु देवि प्रवक्ष्यामि स्तोत्रं सर्वसुखावहम् ।
सर्वकामप्रदं नृणां हनुमत्स्तोत्रमुत्तमम् ॥ १॥

तप्तहाटकसङ्काशं नानापुष्पविराजितम् ।
उद्यद्बालार्कवदनं त्रिनेत्रं कुण्डलोज्ज्वलम् ॥ २॥

मौञ्जीकौपीनकं हेममययज्ञोपवीतिनम् ।
पिङ्गलाक्षं महाकायं टङ्कशैलेन्द्रधारिणम् ॥ ३॥

मूर्तित्रयात्मकं वीरं महाशौर्यं महाहनुम् ।
हनूमन्तं वायुसूनुं नमामि ब्रह्मचारिणम् ॥ ४॥

त्रिवर्णाक्षरमन्त्रस्थं जपाकुसुमसन्निभम् ।
नानाभूषणसंयुक्तमाञ्जनेयं नमाम्यहम् ॥ ५॥

पञ्चाक्षरस्थितं देवं नीलनीरदसन्निभम् ।
पूजितं सर्वदेवैस्तु राक्षसारिं नमाम्यहम् ॥ ६॥

अचलद्युतिसङ्काशं सर्वालङ्कारभूषितम् ।
षडक्षरयुतं देवं नमामि ब्रह्मचारिणम् ॥ ७॥

सप्तवर्णमयं देवं हरीशं तं सुरार्चितम् ।
सुन्दरास्याब्जसंयुक्तं त्रिनेत्रं तं नमाम्यहम् ॥ ८॥

अष्टादशाधिपं देवं हेमवर्णं महातनुम् ।
नमामि जगतां वन्द्यं लङ्काप्रासाददाहनम् ॥ ९॥

अतसीपुष्पसङ्काशं दशवर्णात्मकं विभुम् ।
जटाधरं चतुर्बाहुं नमामि कपिनायकम् ॥ १०॥

द्वादशाक्षरमन्त्रस्य नायकं कुन्तधारिणम् ।
हेमवर्णलसत्कायं भजे सुग्रीवमन्त्रिणम् ॥ ११॥

मालामन्त्रात्मकं देवं त्रिवर्णं च चतुर्भुजम् ।
पाशाङ्कुशधरं देवं कपिवर्यं नमाम्यहम् ॥ १२॥

त्रयोदशाक्षरहितं सीतादुःखनिवारणम् ।
सुरासुरगणैः सर्वैः संस्तुतं प्रणमाम्यहम् ॥ १३॥

हाहाकारमुखान्तनित्यदहनज्वालासमूहोज्ज्वलं
विद्वन्मण्डलजातरोषपरुषं श्रीरामदासं विभुम् ।
सञ्चूर्णीकृतधूम्रलोचनमहाह्यक्षादिरक्षोबलं
तं वन्दे रविधारणं सुरवरैर्वन्द्यं समीरात्मजम् ॥ १४॥

रघुपतिपदभक्तं किङ्किणीकोत्तमाङ्गं
मुकुलितकरपद्मं मोदयानं तरङ्गे ।
पुलकितविपुलाङ्गं पुण्यलीलानुषङ्गं
वनचरकुलनाथं वायुपुत्रं नतोऽस्मि ॥ १५॥